# किमुवाच शङ्कराचार्यः ?

एस्.जगन्नाथः, मैसूरु
१०.०५.२०२०
9972016425 jagannathas1956@gmail.com

मम ज्ञानानुसारेण-अद्वैतं ब्रह्मानुभवं शङ्कराचार्य इत्थमवर्णयत् :-

अस्माकमनुभवगोचरं यत् सत्यं ब्रह्म तस्य स्पष्टप्रतिपत्तये वेदान्तानामध्ययनं करणीयम्। ततस्तदनुभवप्रतिपत्तिविघ्नभूता अविद्याऽपगच्छति; येन सदेव ब्रह्म स्पष्टायते। अर्थात्, कोऽपि नूतनो ऽस्मदाद्यनुभवानारूढोऽनुभवः वर्णनपथे नैव पतति वेदान्ते।

अयं सारो शङ्कराचार्यप्रतिपादितस्य सिद्धान्तस्य-

प्रतिक्षणमस्माकं केऽप्यनुभवाः संभवन्त्येव। दर्शनं कश्चनानुभवः। श्रवणं चान्योऽनुभवः। स्पर्शो गन्धग्रहणम् रसानामास्वादः एतदादिकमनुभवा एव। चिन्तनमप्यनुभवः। कोपोद्वेगसुखदुःखसन्तोष हास्यानि चानुभवकक्ष्याप्रविष्टानि। शृङ्गारादयो नवरसा इत्येकयोक्त्याऽभिधानमेतेषाम्। निद्राऽप्य नुभवः। दृष्टस्वप्नानामस्माकम् 'एष स्वप्नो मया दृष्ट' इति यत् स्वप्नस्य स्मरणं तदप्यनुभवः। गाढायाः स्वप्नरहिताया निद्राया जागरितानामस्मा कं 'नाहं किञ्चनावेदिषम्' इति यत् स्मरणं तदप्यनुभव एव।

किंबहुना ?'अहम्' इति यदस्माकं स्फुरति प्रतिक्षणम् तदप्यनुभवः।

प्रायः 'अहम्' इत्यनुभवोऽन्यानुभव मिश्रितोऽनुभूयते। तद्यथा- पश्यन्/न्ती अहं, शृण्वन् /ती अहं, जिघ्रन्/न्ती अहं,स्पृशन्/न्ती अहं, रसयन्/न्ती अहं, चलन्/न्ती अहं, तिष्ठन्/न्ती अहं, पतन्/न्ती अहम्- इत्यादिकया रीत्या। विश्वस्मिन् अस्माकम् अस्तित्वम् 'अस्मि' इत्येवंप्र कारकानुभवरूपं यत् स्फुरति तच्च विविधानुभव मिश्रणेन।

एतेषामनुभवानां पार्थक्येन कदाचित् स्फुरणम्। 'पश्यामि' इत्यनुभवतः पृथगेव 'जिघ्रामि' इत्यनुभवः। कदाचिच्च 'पुष्पं पश्यन्/न्ती जिघ्रामि' इति दर्शनघ्राणयोर्युगपदनुभवः। कदाचिच्च दूरतः पुष्पं पश्यतो जनस्य केवलं 'पुष्पदर्शनमनुभवामि' इत्याकारको घ्राणामिश्रितो दर्शनानुभवः। 'अहम्' इत्यनुभवो नैवम्। कदाचिद् दैहिकैन्द्रियकमानसिकानु भवान्तरसंपर्कशून्यस्यापि 'अहम्'इत्यनुभवस्य 'अस्मि' इत्यनुभवमिश्रितत्वेनैव भासमानत्वात्।

अधुना पर्यनुयोगोऽयमुपतिष्ठते-एतेषामनु भवानां किं मूलमिति। अन्येन क्रमेण प्रश्नोऽयं पृच्छ्यताम्। पार्थक्येनाहमो मिश्रणेन भासमाना दैहिकै न्द्रियकमानसिकानुभवाः कस्मिन् महानुभवे प्राप्नुवन्त्य वलम्बनं यद्भावे सत्येतेषां भावो यदभावे सत्येतेषा मप्यभावः?

अत्राह गुरुः- महानेकोऽनुभव एव पार्थक्येना नन्ता अनुभवा इव भासते। अर्थात् पार्थक्येन गोचरी भवन्तोऽनुभवा मूलत एकस्यैवाखण्डानुभवस्य खण्डाः।

स एषोऽखण्डोऽनुभवो ब्रह्मेत्युच्यते।

'महत्' 'बृहत्' इति शब्दयोरनयोरुपनिषत्सु 'बृहत्' इति शब्दस्य रूपान्तरं 'ब्रह्म' इत्येतच्चितम्। 'महत्' इत्येतत् किमर्थं न चितम् इति चेत् ; महच्छब्दे चिते बृहच्छब्दस्तद्रूपान्तरं ब्रह्मशब्दो वा किमर्थं न चित इति प्रश्नान्तरस्योदयसंभवात् यत् किञ्चिदेतदित्युपेक्ष्यम्। अशोकवनिकान्यायो वाऽत्रानु संधेयः। किमर्थमशोकवनिकायामेव स्थापिता सीता रावणेन इति चेदशोकवनिकाभिन्ने स्थले स्थापितायां सीतायां, किमर्थं सीताऽशोकवनिकायां न स्थापितेति प्रतिप्रश्नस्य संभवः। ''बब्बब्बा ,बिब्बिब्बी'' इत्याद्य

नर्थकान् शब्दानचिन्वन् वेदान्तो महदित्यर्थप्रति पादकं यद् ब्रह्मशब्दमचिनोत् तदनया युक्त्या समर्थनीयम्।

ब्रह्मैतदेव कालदेशयोर्वास्तविकं स्वरूपम्। अर्थाद् ब्रह्मैव कालरूपेण देशरूपेण चास्माभिरनु भूयते। एतदेव ब्रह्म ऐन्द्रियका अनुभवाः।अयमेव ब्रह्मानुभवो मनउत्थानि विविधानि चिन्तनानि। संतोषसंकटक्रोधहास्योल्लासवैरस्यादिरूपा अनुभवा मूलतो ब्रह्मैव।इदमेव ब्रह्म जागर्तिस्वप्नसुषुप्तिरूप मनु भूयते।'अहमेतत् सर्वमनुभवामि' इतिरूपो ऽनुभवोऽपि ब्रह्मैव।

अत्र पृच्छति प्रच्छकः-

''अस्तु सर्वमपि ब्रह्मैव, अहमित्यनु भवोऽपि ब्रह्मैव, ब्रह्म विना अहमित्यनुभवोऽपि न भवति।किन्तु सर्वानुभवानां वास्तविकस्याकारस्य तस्य ब्रह्मेत्यभिधानमेवासमञ्जसम्।तथा हि- ब्रह्मेति शब्दस्य हि बृहदित्यर्थः। बृहधातो र्मनिन्प्रत्यययोगे ब्रह्मशब्दो निष्पद्यत इति सर्वसंप्रति पन्नम्।

''इदं हि स्वाभाविकं लोके यद् 'बृहद्वस्तु' इति श्रुत्वा 'कस्माल्लघुनो वस्तुन' इति प्रच्छनं, 'लघुवस्तु' इति श्रुत्वा 'कस्माद् बृहतो वस्तुन' इति च प्रच्छनम्।

''ब्रह्मैतत् कस्माद् बृहत्तरम् ? अथवा केभ्योऽनुभवेभ्यो बृहत्तमम् ? ब्रह्मभिन्नं किमपि नास्तीति प्रतिपित्सन् सिद्धान्ती सम्यगाकर्णयतु। सति च ब्रह्मभिन्ने वस्तुनि तद्वस्त्वपेक्षया ब्रह्मैतद् बृहत्तरमिति; सत्सु च ब्रह्मभिन्नेषु केषुचन वस्तुषु तदपेक्षया ब्रह्मैतद् बृहत्तममिति वक्तुं सुकरम्। असति च ब्रह्मभिन्ने वस्तुनि कस्माद् वस्तुन एतद् ब्रह्म बृहत्तरं भवितुमर्हति ?''

नेयमप्रतिसमाधेया समस्या।'ब्रह्मणो ऽपेक्षया बृहत्तरं किमपि नास्ति' इत्यभिप्रायेण ब्रह्मणो ब्रह्मेति संज्ञा इत्युत्तरणस्य शक्यत्वात्।

महानुभवो ब्रह्म किमर्थं दैहिकैन्द्रियकमानसिकरूपाल्पानुभवेन जाग्रत्स्वप्न सुषुप्तिरूपाल्पानुभवेन अहमितिरूपाल्पानुभवेन च भासते? महाननुभवो ब्रह्म महानुभवरूपेणैव अर्थात् ब्रह्मानुभवरूपेणैव भासताम् इति कोऽपि कथयेत्।

सरलमत्रोत्तरम्।सर्वेषामनुभवानां ब्रह्मत्वे ऽपि, एते यदल्पानुभवरूपेण उत्पद्यन्ते भासन्ते लीयन्ते च- तत्तु अज्ञानस्य हेतोः।

एतस्मादज्ञानान्मोक्तुम् उपनिषदामध्ययनं करणीयम्।

अधीतोपनिषत्कस्य जनस्य पार्थक्येनोत्पद्य माना भासमाना लीयमानाश्चानुभवा मूलतो ब्रह्मैवेति स्फुटा जायते प्रतिपत्तिः।अत्र या क्रिया सा त्वज्ञान नाशरूपा, न पुनर्ब्रह्मसाक्षात्काररूपा।अस्माकं सर्वेषामनुभवानां ब्रह्मरूपत्वाद् उपनिषदध्ययनानन्तरं किमपि नवीनं ब्रह्म मूलभूतानुभवभिन्नं नोत्पत्तु मर्हति।उपनिषदध्ययनजस्य विचारस्य ब्रह्मसाक्षा त्काररूपां क्रियां कर्तुं नैवास्ति सामर्थ्यम्। तच्छक्तिरज्ञानविनाशमात्रविश्रान्ता।

भूम्यन्तर्गतं जलं प्राप्तुकामैर्जनैः खनित्रकुद्दाला द्युपकरणैर्भूः खन्यते, भूम्यन्तर्गतस्य जलस्य दर्शने विघ्नभूतं प्रस्तरादिकं चापवार्यते। आदत्तखनित्र कुद्दालाद्युपकरणैर्जनैर्याऽऽरभ्यते खननक्रिया, तस्याः सामर्थ्यं न जलस्योत्पादने ; तस्याः सामर्थ्यं तु प्रस्तराद्यपवारणाकारम्।

परिभाव्यतामन्यदिदमुदाहरणम्।वायौ वाति, मेघानामपवृत्त्या, सन्नेव सूर्यः स्फुटं दृश्यते। वातो वायोः शक्तिर्मेघापनयनरूपा न पुनः सूर्यो त्पादनरूपा।(प्राय उदाहरणमिदं शङ्करानु यायिभि र्दर्श्यते।)

निदर्शनयोरनयोर्गाढं चिन्तनेनेदं स्फुटायते- उपनिषदामध्ययनं यत् करणीयं, तदज्ञानस्य निवा रणार्थं न पुनर्ब्रह्मसाक्षात्कारार्थम्।अस्माकं मूलस्वरूपं ब्रह्मैव,यच्च पार्थक्येन भासमानानामनुभवानां बन्धनात् सर्वदाऽपि मुक्तम्।

पृथक्पृथग् भासमानेषु अहंमिश्रितेष्वनुभवे ष्वनुभूयमानेष्वपि;अर्थाद्, अज्ञानस्य नाशात् पूर्वमपि- अस्माकं वास्तविकोऽनुभवो ब्रह्मैव।अज्ञानस्य नाशान

न्तरमपि ब्रह्म ब्रह्मैव। अत्र पूर्वम् उत्तरम् इत्यादयो व्यवहाराः-अज्ञाननाशात् पूर्वम्, अज्ञाननाशा दुत्तरम्, इत्यर्थकाः।

आदीयतां सर्परज्ज्वोरुदाहरणम्। रज्जौ भ्रान्त्या सर्पे निश्चितेऽपि,रज्जू रज्जुरेव न पुनः सर्पः। 'नायं सर्पः किन्तु रज्जुः 'इति निश्चितायां धियि, नवीना रज्जुर्नोत्पद्यते। रज्जौ सर्पभ्रमसमये, तथा, 'रज्जुरियं न सर्प'इत्यवबोधे-रज्जौ कोऽपि न व्यत्ययः। भ्रमकाले रज्जौ सर्पभ्रमवतो जनस्य 'सर्पोऽस्त्यत्र' इति भ्रान्तिरुदयेत। सर्पभ्रमरहितस्य तु जनस्य नेत्थंभूतलक्षणो भ्रमः। तस्माद् भ्रमवति जन आभासमानः सर्पो न सत्य इति निश्चीयते।

एवंभूता भ्रमघटनाः प्रत्यहमस्माकं जीवने संभवन्त्यनेकाः। केभ्यश्चन वर्षेभ्यः पूर्वं मत्परिचितं कमपि जनं संद्रष्टुं कञ्चन विद्यालयमनेकवार मगच्छम्। मम तत्रोपस्थितौ प्रायेण कश्चन महाशयो दृश्यते स्म। स तत्रैवोद्योगी स्यादित्यह मौहे। कदाचित् तमपृच्छम्- 'अत्र कुत्रास्ति भौतशास्त्रविभागः?' 'नाहं जानामि' इत्युदतरत् सः। 'अये, किं न जानाति भवान् भौतशास्त्रवि भागस्थलमत्र? अत्रैव किल भवान् सोद्योगः' इति पृष्टः सः 'नाहमस्म्यत्रोद्योगी। वस्तुतस्तु ममोद्योग एष्यन् पैण्ट्स् (Asian Paints) इत्यत्र। मम परिचितः कश्चनात्रास्त्युद्योगी। तं द्रष्टुं भूयो भूय आगच्छाम्यत्र' इत्यवोचत।

विवरणसापेक्षेयं घटना। स विद्यालयो द्योगी इति यदाऽहं व्यभावयं तदा स नासीत्तत्रो द्योगी। स एष्यन् पैण्ट्स् इत्यत्रोद्योगी इति मयि ज्ञानोत्पत्त्यनुपदं तेन नापि विद्यालयोद्योग स्त्यक्तो नापि एष्यन् पैण्ट्स् इत्यत्रोद्योगः प्राप्तः। यदाऽहं स विद्यालये सोद्योग इत्यौहे तदाऽपि स एष्यन् पैण्ट्स् इत्यत्रैवोद्योगी। एष्यन् पैण्ट्स् इत्यत्र स उद्योगीति बोधस्य मय्युत्पत्तेरनन्तरं स एष्यन् पैण्ट्स् इत्यत्र नावातरत्। स हि एष्यन् पैण्ट्स् इत्यत्रैव सोद्योगः। सत्यं (तदुद्योगविषयकं) किमिति ज्ञानोत्पत्तेः पूर्वमपि सः एष्यन् पैण्ट्स् इत्यत्रैव उद्योगी तद्ज्ञानोत्पत्त्यनन्तरमपि एष्यन् पैण्ट्स् इत्यत्रैव उद्योगी। मम तद्विषयक-ज्ञानाज्ञानयोः कारणेन तस्य एष्यन् पैण्ट्स् इत्यत्रोद्योगित्वधर्मे कोऽपि न व्यत्ययः।

भ्रमकाले भ्रान्तो विषयः सत्य इति चेत्- विचार्यतामत्र सावधानम्। भ्रान्तिर्भ्रान्तजनमात्रनिष्ठा न त्वभ्रान्तेऽपि जने संक्रान्ता। कश्चन वञ्चको जनान् वञ्चयति। वञ्चनकाले वञ्चिता जनास्तं सज्जनं मन्यन्ते। निवृत्ते तस्मिन् सज्जनत्वभ्रमे स वञ्चक इति वञ्चितैर्ज्ञायते। 'वञ्चके वञ्चितानां सज्जनत्वभ्रमे विनष्टे स वञ्चक इति ज्ञाने जाते,स बध्यतां दण्ड्यतां च; वञ्चनकाले तु वञ्चितानां तस्मिन् सज्जनत्व भ्रम कारणात् स सज्जन इत्येव निश्चीयतां, न स बध्यतां नापि दण्ड्यताम्। तेन कोऽपि न दोष' इति प्रतिपादनं कियत्या मात्रया प्रशस्तमिति विचारयन्तु सुधियः।

अत्र -''अस्माकमूर्ध्वं मेघपङ्क्तेः कारणात् सूर्यमण्डलस्यास्फुटत्वेऽपि सूर्यमण्डलं मेघादूर्ध्वं वर्तत एवेति वयं जानीमहे। सूर्यमण्डलस्य उद्बुद्धतया प्रतिभासनाभावेऽपि सूर्यमण्डलं नास्तीति भ्रान्ति रस्माकं न संभवति। तद्वत् पृथक्पृथगनुभूयमानाना मनु भवानां मूलं ब्रह्मैवेति ज्ञानमस्माकमस्त्येव'' इति कोऽपि ब्रूयात्।

ब्रवीतु स धन्यजन्मा,यस्य वचनं सत्यम् !

कथमेतत् ? इत्थम्-

नाहमवेदिषं, नाजानाम् इति व्याहारो भूयो भूयो निःसरत्यस्माकं वदनेभ्यः।

'ह्यः श्रुतं कस्यचन महाशयस्य भाषणम्। तेन किमुक्तमिति नाहमजानाम्।'

'अद्य परीक्षाप्रश्नपत्रिकायां तृतीयः प्रश्नो नार्थतोऽवगतः। तस्मान्नोदतरं तम्।'

'केनचन मह्यं ग्रन्थः कश्चन दत्तः। तत्रत्या शैली क्लिष्टा। तत्रत्योऽभिप्रायो नावगतो मयका।'

'एतावन्तं कालं गोविन्दः कुत्रानैषीदिति नाहं जानामि।'

-एतेषु व्याहारेषु-

'भाषणमेवाहम्, अहमेव भाषणम्'इत्यद्वैतं नास्ति।

'प्रश्नपत्रिकैवाहम्, अहमेव प्रश्नपत्रिका' इत्यद्वैतं नास्ति।

'ग्रन्थ एवाहम्, अहमेव ग्रन्थ'इत्यद्वैतं नास्ति।

'गोविन्द एवाहम्, अहमेव गोविन्द' इत्यद्वैतं नास्ति। मत्तो भिन्नाः भाषणप्रश्नपत्रिका ग्रन्थगोविन्दाः।

अत्र मद् भिन्ना भाषणप्रश्नपत्रिकाग्रन्थ गोविन्दा ज्ञेया ज्ञातव्यविषया वा।

सुषुप्तौ तु कोऽपि न ज्ञातव्यो विषयः। भाषणादिषु सत्स्वपि ज्ञातव्यविषयेषु तद्बोधराहित्य मेव नाहं जानामि इत्यादिभिर्व्याहारैरवगन्तव्यम्। सुषुप्तौ पुनर्ज्ञातव्यविषयस्यैवाभावाद् मद्भिन्नज्ञेय वस्तुराहित्यमेव नाहमजानाम् इति व्याहारेणाव गन्तव्यम्।

स्वप्नादुत्थितस्य जनस्य 'इत्थंभूतलक्षणः स्वप्नो मया दृष्ट' इत्यनुभवः। स च 'अहम् एवं रीतिकमद्भिन्नज्ञातव्यविषयस्मरणवान्/वती ' इत्याकारकः। 'स्वप्न एवाहम्, अहमेव स्वप्न' इति न तत्राद्वैतम्।

स्वप्नानुभवहीनस्य गाढाया निद्राया उत्थितस्य 'नाहं किञ्चनावेदिषम्' इत्यनुभवः पूर्ववर्णितेभ्योऽनुभवेभ्यो विलक्षणः। भाषणादि पृथक्पृथग्ज्ञेयवस्तूनामुल्लेखपूर्वकं तद्विषयकज्ञानस्या भावो व्याहृतः पूर्वस्मिन् उदाहरणे। अर्थात् पार्थक्येनानुभूतानि वस्तूनि नाम्ना संकीर्तितान्यत्र। सुषुप्तेरुत्थितस्य जनस्य 'नाहं किञ्चनावेदिषम्' इत्यत्र तु पार्थक्येन किमपि नानुभूतमित्यर्थसिद्ध्या पृथक्पृथगनुभवविलक्षणो ब्रह्मानुभव एव सुषुप्तो त्थितेनोक्तस्य व्याहारस्यार्थ इति ज्ञायते। सुषुप्ति काले तदनुभववतो जनाद् भिन्नं किमपि ज्ञातव्यं नासीत्। तस्मादेव कारणात् 'नाहमवेदिषम्' इति सुषुप्तोत्थितस्य जनस्य तत्सम्बद्धो व्याहारो जागर्तौ। 'नाहं किञ्चनावेदिषम्' इति व्याहारस्य 'मद् भिन्नं किमपि नासीत्' इति वास्तविकोऽर्थः। 'नाहं किञ्चनावेदिषम् 'इत्यस्यैवं गृह्यतां तात्पर्यम् :- 'ब्रह्माभिन्नानुभववान्/वती सुषुप्तिकालेऽहमासम्।'

जागर्तौ स्वप्ने च - मदितरस्य ज्ञातव्यस्य विषयस्यास्तित्वं तस्य ज्ञानमज्ञानं स्मरणं च- इत्यनु भवचतुष्टयम्। अत्राज्ञानं सत एव विषयस्य। सुषुप्तौ पुनर्मद्भिन्नस्य ज्ञातव्यस्य वस्तुन एवाभाव इति जागर्ति स्वप्नयोः सुषुप्तिर्वैसादृश्यवती। मद्भिन्नवस्त्व भावो नाम मत्स्वरूपम् अर्थाद् ब्रह्मानुभवः।

अयं च मथितार्थः :- शुद्धो ब्रह्मानुभवः सुषुप्तिकालेऽस्माकं भवत्येव।

ब्रह्माभिन्नं स्वरूपं जागर्तौ स्पष्टं प्रतिपत्तुं तत्प्रतिपत्तिविघ्नकरीमविद्यां नाशयेत्। तदर्थं चोप निषद आश्रयणीयाः।

अद्वैतसिद्धान्तोऽद्वैतानुभवावलम्बी। **अद्वैत** इति, **अद्वैतानुभव** इति च शब्दौ ब्रह्मानुभवस्यैव संज्ञान्तरे।

अविद्यानाश एव 'मुक्तिप्राप्तिः' इति शब्देन कदाचिद् व्यवह्रियेत। 'मुक्तिप्राप्तिः' इति शब्दो च्चारणमात्रेण तच्छब्दोच्चारयिता जनोऽपराद्ध इति वक्तुं नैव शक्यते,'अविद्यानाश' इत्यर्थं मनस्याकलय्य 'मुक्तिप्राप्तिः' इति शब्दं स प्रयुङ्क्ते इति ज्ञातव्यत्वात्। यथा- खनित्रकुद्दालादि प्रयुज्य, मृत्प्रस्तरापवारणपूर्वकं विद्यमानस्यैव भूम्यन्तर्गतस्य जलस्य द्रष्टा जनः 'जलमुत्पन्नम्'इति सानन्दं घोषयति- तद्वत्।

**अविद्यायां विनष्टायां सम्यग् वेदान्तचिन्तया।**
**सदेव भासते ब्रह्म शङ्कराचार्यगीरियम्॥**

~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~